17

I 17 (one)

श्रीः

॥ शिवाभ्यां नमः ॥

इयं किल

श्रीमत्परमहंसपरिव्राजकाचार्यविश्वेश्वरसरस्वतीपूज्यपादशिष्य-
अद्वैतविद्याप्रतिष्ठापकनिरस्तविविधद्वैतवादिवितण्डसर्वज्ञ-
शिरोमणिश्रीमधुसूदनसरस्वतीकृतिः

# ॥ अद्वैतसिद्धिः ॥

मुमुक्षूणां निखिलानर्थनिवृत्तिपूर्वकपरमानन्दाविर्भावलक्षणपरमपुरुषार्थानन्य-
साधनाद्वैतनिश्चयाय अद्वैतविद्वेषिणामुन्मूलनाय च विरचिता
श्रीमच्चम्पकारण्यवास्तव्यश्रीमहामहोपाध्यायबिरुदाङ्कित-
श्रीराजुशास्त्र्यपरनामकश्रीमत्त्यागराजमखिराज-
चरणांबुजसेवासमासादितब्रह्मविद्यावैशद्येन
श्रीगोष्ठीपुराभिजनेन

## हरिहरशास्त्रिणा

संशोधिता च

कोनेरिराजपुरग्रामवास्तव्यसहृदयसमुदायदास

## वि· साम्बशिवार्येण

कुम्भघोणस्थस्वकीय
श्रीविद्यामुद्राक्षरशालायाम्
मुद्राक्षरैरङ्कयित्वा प्राकाश्यं प्रापिता
समुल्लसतितराम् ।

-:(*):-

मूल्यं सार्धं रूप्यचतुष्टयम् (प्रेषणव्ययः कलाचतुष्टयं च) 4-

December 1893.

Price—4½ Rs. *Postage As. 4.*

श्री

विद्याशङ्करो
विजयते

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठतपश्चक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्यव्याख्यानसिंहासनाधीश्वरसकल निगमागमसारहृदयसाङ्ख्यत्रयप्रतिपादकवैदिकमार्गप्रवर्तकसर्वतन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्नाटकसिंहासनप्रतिष्ठापनाचार्यश्रीमद्राजाधिराजगुरुभूमण्डलाचार्यऋश्यशृङ्गपुरवराधीश्वरतुङ्गभद्रातीरवासश्रीमद्विद्याशङ्करपादपद्माराधकश्रीमन्नृसिंहभारतीस्वामिगुरुकरकमलसञ्जातशृङ्गेरीश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिः ॥

अत्यन्तप्रियशिष्यकुम्भघोणनगरवासिश्रीविद्यानिलयमुद्राक्षरशालाम्यानेजरइत्युपपदधारिसाम्बशिवशास्त्रिविषये श्रीनारायणस्मरणपूर्वकविरचिताशिषस्समुल्लसन्तुतराम् आसेतुहिमाचलप्रसिद्धात्रभवच्छ्रीमच्छङ्करभगवत्पादपूज्यपीठविषायिणी भक्तिरनवधिकश्रेयोनिदानमिति सर्वजनविदितमेतत्साम्प्रतम् ॥ इह खलु कुपितफणिफणामण्डलच्छायसच्छायेषु स्रक्चन्दनादिषु विषयेषु मोमुह्यमानतया जन्मजरानिधनाद्युपप्लवबहुले संसारचक्रे बंभ्रम्यमाणान् सकलानपि जनानुपलभ्य तदनुजिघृक्षया श्रीमच्छङ्करदेशिकचरणैर्येयमद्वैतविद्या ब्रह्मसूत्रभाष्यादिमुखेन प्रतिष्ठापिता शिष्यप्रशिष्यादिमुखेन। सर्वतः प्रचारिता च तदनु कालवशात् जरीजृम्भमाणैर्ज्ञान्तध्वान्ताद्यनेकमतप्रभेदैरसम्भावनाविपरीतभावनादिदोषकलुषिततया विरलप्रचारा समभवदिति हेतोरसम्भावनादिदोषविधूननाय श्रीमद्विद्यारण्यमधुसूदनसरस्वतीब्रह्मानन्दसरस्वत्यादिभिर्विरचितैरनेकैः प्रबन्धैः सर्वतोव्याप्तैवासीत् सेयमिदानीं प्रबन्धानां बाहुल्येन लिखितुं लेखयितुं च अशक्यतया कथञ्चिल्लेखनेऽपि लेखकप्रमादजनिताशुद्धिसंक्रान्तिबहुलतया च शोधितानामपि तेषां सर्वत्र दौर्लभ्येन च विरलप्रचारा वरीवर्तीत्यस्यां दशायामद्वैतमहानिबन्धमालात्मिका विद्वद्भिस्सम्परिशोध्य मुद्रापयितुमारब्धा एषा अद्वैतमञ्जरी शिरसि निदधाना श्रीमच्छङ्करदेशिकचरणानामाज्ञामाकलयन्ती अद्वैतविद्यायास्स्वात्मनश्च सर्वत्र सुप्रचारं सफलयन्ती च प्रबन्धकर्तां मुद्रापयितुश्च प्रयासं अशेषानपि लोकानुपकुर्यादिति श्रीमच्छारदाचन्द्रमौलीश्वरादिदेवताः प्रार्थयामहे. वि० आश्विनशुक्लअष्टम्यां सौम्यवासरे कडत्तूर्ग्रामे.

॥ श्रीः ॥

# भू मि का

—:(*):—

आर्यमिश्राः!!

विज्ञातमेव खलु भवतां अतीतानेकभवपरम्परासमार्जितसुकृतसम्पदावार्जितभगवदनुग्रहासादितसत्त्वोत्कर्षाधीनाविवेकवैराग्यादिसाधनसम्पन्नैः प्राक्तनसुकृतसम्पत्त्यधीनविषयविशेषसम्पर्कप्रयुक्तसत्त्वोत्कर्षापकर्षरूपशुद्धितारतम्ययुक्तसुखरूपान्तः करणवृत्तिप्रतिफलितस्वरूपानन्दरूपविषयानन्दमपि क्षणिकत्वेनानुमन्यमानैः श्रवणमनननिदिध्यासनाभ्यासनिर्धूतनिखिलप्रातिबन्धकानुबन्धैः पुरुषधौरेयैरेव प्राप्यमाणं वस्तुसच्चैतन्यमात्रत्वाविरोधिबद्धपुरुषाविद्याकल्पितनिरवग्रहैश्वर्यतदनुगुणगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिस्सन्धिबन्धपरमेश्वरभावापन्नं मात्रयापि दुःखदविष्ठं परमपुरुषार्थकाष्ठापन्नं नित्यनिरतिशयापरिच्छिन्नसुखमात्रस्वरूपमद्वितीयाखण्डचिन्मात्रप्रत्यगभिन्ननिर्विशेषात्मतत्त्वमजानन्तः इतरेतरभेदाग्रहेण आत्मानात्मनोरन्योन्यधर्म्यध्यासपुरस्सरमनात्मधर्मान् कर्तृत्वभोक्तृत्वादीन् आत्मनि आत्मधर्मांश्च चैतन्यादीननात्मनि चाध्यस्य नानाविधकुतर्काकुलचेतसः जननमरणप्रवाहपरम्परारूपे अनादिसंसारकूपे बम्भ्रम्यमाणाः मोमुह्यन्त एव प्रायेण जीवराशयइत्यतस्तानुद्दिधीषुर्भगवान् परमकारुणिकः परमेश्वरः 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानाय धर्मस्य तदात्मानं सृजाम्यह'मिति प्रतिज्ञातार्थपरिपालनाय 'चतुर्भिस्सह शिष्यैस्तु शङ्करोऽवतरिष्यति ।' इति सौरपुराणवचनानुसारेण बहोःकालात्पूर्वमेवास्मिन् कलियुगे श्रीमच्छङ्करभगवत्पादरूपेण गृहीतलीलामानुषविग्रहः अवतीर्य केरले कालटिग्रामे शिवगुरोरार्याम्बायामधीत्य चाद्य एव वयसि अखिलमप्यागमं अभ्यस्य च सर्वशास्त्राणि आश्रित्य चाद्याश्रमादेव पश्चिममाश्रमम् अनादृत्य च शारीरं प्रयासं भटित्वा चावनिमण्डलं अनुष्ठाप्य चाश्रमधर्मान् अनुबोध्य चाखिलागमतात्पर्यविषयमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मभूतमखण्डपरिपूर्णसत्यज्ञानानन्दामलाद्वितीयस्वप्रकाशनिर्विशेषब्रह्मस्वरूपमेव परमार्थतत्त्वम्, आरचय्य च भगवद्वेदव्यासप्रणीतानेकन्यायोपबृंहितचतुरध्याय्यात्मकोत्तरमीमांसाभाष्यादिप्रबन्धजातम्, अवमत्य च नास्तिकादिदुर्मताभिमानिनः कुदृष्टीन्, अवस्थाप्य च वैदिकमद्वैतं मतमप्र-

तिबन्धम्, अध्याप्यचात्मीयमनुमतं भाष्यमन्तेवासिनः, अभिषिच्य चाद्वैतमतपरिपालनाधिपत्ये सच्छिष्यान्, आसाद्य चातुलां कीर्तिम्, आससाद च पुनरैश्वरं धामेति। अनन्तरं च तेषामेव मतमवलम्बमानाः विवरणकाराचार्यवाचस्पतिमिश्रादिश्रीमदप्पयदीक्षितवर्यपर्यन्ताः प्राञ्च आचार्याः अनवरतपरिचीयमानभाष्यार्थतत्त्वाः विवरणवाचस्पत्यपरिमलन्यायरक्षामण्यादिप्रबन्धजातैरुन्मूलितकुमतिकुतर्कमद्वैतमेव प्रत्यतिष्ठिपन्नित्यत्र नास्ति विशयः। अनन्तरं चार्वाचीनैः कैश्चिद्ध्वान्तजान्तमतप्रविष्टैरनिवार्याद्वैतद्वेषगाढानलकलितहृदयैः स्वमनीषापरिकल्पितयुक्तिवाक्याभासविस्तृतैः न्यायामृतादिग्रन्थैराकुलीकृतमिव भवत्यद्वैतमतमित्यालोच्य सर्वतन्त्रस्वतन्त्राः अतिलोकोत्तरसत्तर्कोपेतप्रबन्धनिर्माणचातुरीधुरीणाः सर्वज्ञशिरोमणयः श्रीमधुसूदनसरस्वतीब्रह्मानन्दयतीन्द्रवराः निखिलानपि लोकाननुजिघृक्षवः द्वैतवादिपरिकल्पितकुयुक्तितूलवातूलान् निखिलानर्थव्रातनिदानभूतानाद्यविद्योन्मूलनानन्यसाधनाद्वितीयब्रह्मनिश्चयप्रत्यर्थिभूतासम्भावनादिदोषशङ्कापङ्कक्षालनस्वर्धुनीनिर्झरायमाणवाग्झरीगुम्भितान् अद्वैतसिद्धिब्रह्मानन्दीयादीन् प्रबन्धान् व्यरचयन्। यद्यप्यस्मिन्महति महीमण्डले श्रीमच्छङ्करभगवत्पादीयमतानुबन्धिप्रौढब्रह्मानन्दीयादिप्रबन्धपरिशीलनार्हमतयो विरलाः पण्डिताः, तथापि क्वचित् क्वचित् इहजन्मनि जन्मान्तरे वा सन्ततसन्तन्यमानसत्कर्मसन्ताननितान्तनिर्मलान्तःकरणाः आत्मतत्त्वं विविदिषन्त्येव। तेषां चाकलय्य ग्रन्थदौर्लभ्यं विषीदतां मुमुक्षूणामत्यन्तोपकाराय महात्मभिर्महता प्रयासेन विनिर्मितानामद्वैतप्रबन्धानां प्रचारणेनात्मीयं मानुषं जन्म चरितार्थयितुमध्यात्मविद्याविचारपरमानसानामनुग्रहपात्रतां चात्मानमुपनेतुमद्वैतमञ्जर्यभिधालंकृताद्वैतमतानुबन्धिप्रबन्धजातमुद्रणकार्ये महति प्रावर्तिष्ट सहृदयदासस्साम्बशिवार्यः। मुद्रणाय च सम्पादितेषु कोशेषु चम्पकारण्यवास्तव्यश्रीमन्महामहोपाध्यायबिरुदाङ्कितपदवाक्यप्रमाणपारावारपारीणश्रीमद्राजुशास्त्र्यपरनामकश्रीमत्त्यागराजमखिराजानुग्रहलब्धमेकं कोशं —श्रीमत्परमहंसपरिव्राजकाचार्यस्वयंप्रकाशयतीन्द्रपरिपालितारयपुराख्यग्रामस्थाद्वैतकोशशालायास्समानीतं द्वितीयं कोशं वटारण्यक्षेत्रस्थपुस्तकशालायास्समानीतं तृतीयं च एडयात्तुमङ्गलग्रामाभिजनचतुस्तन्त्रपारावारपारीणश्रीमदप्पुशास्त्रिणां कोशं अविच्छिन्नसत्सम्प्रदायसिद्धसमग्रपाठं प्रमाणीकृत्य सम्यक् परिशोध्य कुम्भघोणक्षेत्रस्थश्रीविद्यामुद्राक्षरशालायां मुद्राक्षरैरङ्कयित्वा सञ्चारितां

नन्दनशरत्तुलामासमारभ्य प्रतिमासं प्रचार्यमाणगुच्छशोभितामद्वैतमञ्जरीं प्रथममलंकुर्वाणा श्रीमधुसूदनसरस्वतीविरचिता अद्वैतसिद्धिः तद्व्याख्या ब्रह्मानन्दसरस्वतीविरचिता लघुचन्द्रिका च श्रीमच्छङ्करभगवत्पादविरचितदशश्लोकीव्याख्या सिद्धान्तबिन्दुश्च ब्रह्मानन्दयतीन्द्रविरचितरत्नावल्याख्यटीकासहितः सम्पूर्णा विजयन्तेतराम् । तदहमर्थये साञ्जलिबन्धनमस्मन्मताभिमानिनः समर्पयत सादरां कारुण्यदृष्टिं सफलयत अनवरताद्वैतग्रन्थविचारेण मुद्रणप्रयासम् । अनुभवत च निश्शङ्कमद्वैतसाम्राज्यसर्वस्वम् । अनुगृह्णीत च तथा, यथेयमद्वैतमञ्जरी प्राचीनास्माकग्रन्थगुच्छगुम्भिता इतःपरमप्यविच्छिन्नगुच्छप्रसरा समाह्लादयन्ती अध्यात्मविद्याविचारकुतूहलिनां मनांसि आसादयन्ती च सज्जनप्रेमभाजनतां चिरं जेजीयेतेति । सहन्तां च विद्वन्मणयः अनवधानप्रयुक्तां क्वाचित्कीमक्षरच्युतिम् । प्रसीदन्तु चानेन श्रीमच्छङ्करभगवत्पादचरणा इत्यशेषमतिरमणीयम् ॥

अद्वैतामृतमञ्जरीशकरुणापूरेण संवर्धिता
विद्वन्मानसचञ्चरीकनिवहैरास्वाद्यमाना भृशम् ।
श्रीविद्याकबरीभरेषु सततं भूषायमाणा चिरं
श्रीमत्साम्बशिवार्यसत्तरुशिखालम्बा विजेजीयताम् ॥

इति गोष्ठीपुराभिजनः

हरिहरशास्त्री.

॥ शिवाभ्यान्नमः ॥

चम्पकारण्यवास्तव्यश्रीमहामहोपाध्यायबिरुदाङ्कित-
श्रीराजुशास्त्र्यपरनामकश्रीमत्त्यागराज-
मखिराजकृताश्श्लोकाः ।

---

विख्याता ब्रह्मविद्या जयति भुवि नृणां दुःखमुन्मूलयन्ती
तत्सिद्ध्यर्थाः प्रबन्धा अपि खलु भगवत्पादमिश्रादिक्लृप्ताः ।
तत्रोक्तान् सम्यगर्थान् कुमतिकलुषितान्निर्मलीकृत्य याभ्या-
मासीत्तस्याः प्रतिष्ठा प्रचरणसुकृतात् किं तयोरस्ति पुण्यम् ॥ १ ॥

सिद्धिश्च चन्द्रिका चेत्याभ्यां विदुषामुदेति सुखभूमा ।
मधुसूदनसद्ब्रह्मानन्दयतीन्द्रोपरचिताभ्याम् ॥ २ ॥

तत्तत्कोशविलेखनादियतनैस्तेषां हि सञ्चारणा
शक्या नेति तदर्थमुद्रणपथान्नैवास्ति पथ्यन्तरम् ।
इत्यालोच्य तदर्थमर्थनिवहं सम्पाद्य यन्त्रादिकं
निर्मेयं यदि तद्विलम्ब इति यस्स्वार्थं तु मेने तृणम् ॥ ३ ॥

सम्प्राप्तद्रढिमन्यहो कलियुगेऽप्यस्मिन् नृणां मुक्तये
यत्तस्सत्तमपूर्वदेशिकवरानेषोऽतिशेते जनः ।
कारुण्यादिति तस्य पुण्यमधिकं गण्यं न पुण्यान्तरै-
स्सर्वज्ञः परमेश एव मुदितो दातुं क्षमस्तत्फलम् ॥४॥

अद्वैतग्रन्थदुग्धाम्बुधिमथनसमुद्भूतपीयूषधारा-
साराकारा विपश्चिद्वरहृदयसमुल्लासिनी मञ्जरीयम् ।
आलोक्यैनां स्तुवानः कलयति सशिरःकम्पमाशीर्वचांसि
श्रीमच्चाम्पेयवन्याहृतनिजवसतिः त्यागराजाध्वरीन्द्रः ॥५॥

यदुपक्रममेषाभून्निर्मलाद्वैतमञ्जरी ।
तस्य श्रेयांसि भूयांसि सन्तु साम्बशिवप्रभोः ॥६॥

श्रीमच्छाब्दिकतार्किकवेदान्तरहस्ययुक्तिनिष्णातैः ।
हरिहरसुधीभिरेषा दोषास्पृष्टा सुशोधिता जयति ॥७॥

॥ शुभमस्तु ॥

# अद्वैतसिद्धौ प्रथमपरिच्छेदे

प्रतिपाद्यविषयाः पुटसंख्या

——:(*):——:(*):——:(*):——

प्रतिपाद्यविषयाः पुटसंख्या

## द्वितीयपरिच्छेदे

## तृतीयपरिच्छेदे



## चतुर्थपरिच्छेदे

श्रीगुरुभ्यो नमः ॥

# अद्वैतसिद्धिः ।

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः ।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥

श्रीरामविश्वेश्वरमाधवानामैक्येन साक्षात्कृतमाधवानाम् ।
स्पर्शेन निर्धूततमोरजोभ्यः पादोत्थितेभ्योऽस्तु नमो रजोभ्यः ॥

[illegible]हुभिर्विहिता बुधैः परार्थं विजयन्तेऽमितविस्तृता निबन्धाः ।
मम तु श्रम एष नूनमात्मम्भरितां भावयितुं भविष्यतीह ॥

श्रद्धाधनेन मुनिना **मधुसूदनेन** संगृह्य शास्त्रनिचयं रचितातियत्नात् ।
बोधाय वादिविजयाय च सत्वराणामद्वैतसिद्धिरियमस्तु मुदे बुधानाम् ॥

तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम् । उपपादनं च स्वपक्षसाधनपरपक्षनिराकरणाभ्यां भवतीति तदुभयं वादजल्पवितण्डानामन्यतमां कथामाश्रित्य सम्पादनीयम्। तत्र विप्रतिपत्तिजन्यसंशयस्य विचाराङ्गत्वान्मध्यस्थेन आदौ विप्रतिपत्तिः प्रदर्शनीया । यद्यपि विप्रतिपत्तिजन्यसंशयस्य न पक्षतासंपादकतयोपयोगः । सिसाधयिषाविरहसहकृतसाधकमानाभावरूपायास्तस्यास्संशयाघटितत्वात् । अन्यथा श्रुत्यात्मनिश्चयवतोऽनुमित्सया तदनुमानं न स्यात् । वाद्यादीनां निश्चयवत्त्वेन संशयासम्भवादाहार्यसंशयस्यातिप्रसञ्जकत्वाच्च। नापि विप्रतिपत्तेः स्वरूपत एव पक्षप्रतिपक्षपरिग्रहफलकतयोपयोगः । 'त्वयेदं साधनीय''मनेनेदं दूषणीय' मित्यादिमध्यस्थवाक्यादेव तल्लाभेन विप्रतिपत्तिवैयर्थ्यात्। तथापि विप्रतिवत्तिजन्यसंशयस्यानुमित्यनङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वमस्त्येव । तादृशसंशयं प्रति विप्रतिपत्तेः क्वचिन्निश्चयादिप्रतिबन्धादजनकत्वेऽपि स्वरूपयोग्यत्वात् । वाद्यादीनां च निश्चयवत्त्वे नियमाभावात् । निश्चितौ हि वादं कुरुत इत्याभिमानिकनिश्चयाभिप्रायं परपक्षमालम्ब्याप्यहङ्कारिणो विपरीतनिश्चयव-

१, 'परिग्राहकतये'ति, ग- पाठः ।

तो जल्पादौ प्रवृत्तिदर्शनात् । तस्मात् समयबन्धादिवत् स्वकर्तव्यनिर्वाहाय मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीयैव ॥ तत्र मिथ्यात्वे विप्रतिपत्तिः ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि, न वा पारमार्थिकत्वाकारेणोक्तनिषेधप्रतियोगि न वेति। अत्र च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेति मते शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वं पक्षविशेषणम्। यदि पुनः पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धिरुद्देश्या तदैकदेशे साध्यसिद्धावपि सिद्धसाधनाभावात् तद्वारकं विशेषणमनुपादेयम् । इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च बाधवारणायादरणीयमेव।प्रत्येकं वा विप्रतिपत्तिः,वियन्मिथ्या न वा, पृथिवी मिथ्या न वेति।एवं वियदादेः प्रत्येकं पक्षत्वेऽपि न घटादौ सन्दिग्धानैकान्तिकता। पक्षसमत्वात् घटादेः। तथा हि पक्षे साध्यसन्देहस्यानुगुणत्वात् पक्षाभिन्न एव तस्य दूषणत्वं वाच्यम् । अत एव उक्तं 'साध्याभावनिश्चयवति हेतुसन्देहे एव सान्दिग्धानैकान्तिकते'ति। पक्षत्वं तु साध्यसन्देहवत्त्वं साध्यगोचरसाधकमानाभाववत्त्वं वा। एतच्च घटादिसाधारणम् । अतः तत्रापि सन्दिग्धानैकान्तिकत्वं न दोषः । पक्षसमत्वोक्तिस्तु, प्रतिज्ञाविषयत्वाभावमात्रेण। न च तर्हि प्रतिज्ञाबिषयत्वमेव पक्षत्वम्। स्वार्थानुमाने तदभावात् । एवं विप्रतिपत्तौ प्राचां प्रयोगाः। विमतं मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्, शुक्तिरूप्यवदिति ।नात्रावयवेष्वाग्रहः । अत्र स्वनियामकनियततया विप्रतिपत्त्या लघुतया पक्षतावच्छेदो न विरुद्धः । समयबन्धादिना व्यवधानात्तस्यानुमानकालासत्वेऽप्युपलक्षणतया पक्षतावच्छेदकत्वम् । यद्वा । विप्रतिपत्तिविषयतावच्छेदकमेव पक्षतावच्छेदकम्। प्राचां प्रयोगेष्वपि विमतमिति पदं विप्रतिपत्तिविषयतावच्छेदकावच्छिन्नाभिप्रायेणेत्यदोषः ।। ननु, किमिदं मिथ्यात्वं साध्यते । न तावत् 'मिथ्याशब्दोऽनिर्वचनीयतावचन' इति पञ्चपादिकावचनात् सदसदनधिकरणत्वरूपमनिर्वाच्यत्वम् । तद्धि किं असत्त्वविशिष्टसत्त्वाभावः । उत सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयम् । आहो स्वित् सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभावरूपं विशिष्टम् । नाद्यः । सत्त्वमात्राधारे जगत्यसत्त्व[1]विशिष्टसत्त्वानभ्युपगमात् विशिष्टाभावसाधने सिद्धसाधनात् । न द्वितीयः । सत्त्वासत्त्वयोरेकाभावे अपरसत्त्वावश्यकत्वेन[2] व्याघातात्,निर्द्धर्मकब्रह्मवत्सत्त्वासत्त्वराहित्येऽपि सद्रूपत्वेन अमिथ्यात्वोपपत्त्या अर्थान्तराच्च, शुक्तिरू-

---

१. 'सत्त्वविशिष्टासत्त्वायोगा'दिति ख. पाठः । २. 'अपरस्यावश्यकत्वेन' इति ख. पाठः ।

प्ये अबाध्यत्वरूपसत्त्वव्यतिरेकस्य सत्त्वेन बाध्यत्वरूपासत्त्वस्य व्यतिरेकासिद्ध्या साध्यवैकल्याच्च । अत एव न तृतीयः । पूर्ववद्व्याघातात्, अर्थान्तरात्साध्यवैकल्याच्चेति चेत् । मैवम् । सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षायां दोषाभावात् । न च व्याहतिः । सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा परस्परविरहव्यापकतया वा परस्परविरहव्याप्यतया वा । नाद्यः । तदनङ्गीकारात् । तथाह्यत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम् । किं तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम् । तद्व्यतिरेकश्च साध्यत्वेन विवक्षितः । तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम् । एवं च सति न शुक्तिरूप्ये साध्यवैकल्यमपि । बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात् । नापि व्याघातः । परस्परविरहरूपत्वाभावात् । अत एव न द्वितीयोऽपि । सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारात् । नापि तृतीयः । तस्य व्याघाताप्रयोजकत्वात्, गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात् । यच्च निर्धर्मकस्य ब्रह्मणस्सत्त्वराहित्येऽपि सद्रूपत्वत्प्रपञ्चस्य सद्रूपत्वेनामिथ्यात्वोपपत्त्या अर्थान्तरमुक्तम् । तन्न । एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत् प्रपञ्चस्य प्रत्येकं सत्स्वभावताकल्पने मानाभावात्, अनुगतव्यवहाराभावप्रसङ्गाच्च । सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम् । तथा चोभयात्मकत्वे ऽन्यतरात्मकत्वे वा तादृग्भेदासम्भवेन ताभ्यामर्थान्तरानवकाशः । न चासत्त्वव्यतिरेकांशस्यासद्भेदस्य च प्रपञ्चे सिद्धत्वेनांशतस्सिद्धसाधनमिति वाच्यम् । 'गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वा'दिति भेदाभेदवादिप्रयोगे तार्किकाद्यङ्गीकृतस्य भिन्नत्वस्य सिद्धावपि उद्देश्यप्रतीत्यसिद्धेः यथा न सिद्धसाधनं तथा प्रकृतेऽपि मिलितप्रतीतेरुद्देश्यत्वान्न सिद्धसाधनम् । यथा तत्त्वाभेदे घटः कुम्भ इति सामानाधिकरण्यप्रतीतेरदर्शनेन मिलितासिद्धिरुद्देश्या, तथा प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य तत्प्रयोजकतया मिलितसिद्धिरुद्देश्येति समानम् । अत एव सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टं साध्यमित्यपि साधु । न च मिलितस्य विशिष्टस्य वा साध्यत्वे तस्य कुत्राप्यप्रसिद्ध्या अप्रसिद्धविशेषणत्वं । प्रत्येकं सिद्ध्या मिलितस्य विशिष्टस्य वा साधने शशशृङ्गयोः प्रत्ये-

१. 'सत्त्वविरहेऽपि' इति ख. पाठः । २. सत्त्वोपलम्भा'दिति ख. पाठः । ३. 'तत्राभेदे' इति क. ख. पाठः । ४. 'प्रसिद्ध्या' इति ख. पाठः ।

कं प्रसिद्ध्या शशीयशृङ्गसाधनमपि स्यादिति वाच्यम् । तथाविधप्रसिद्धेः शुक्तिरूप्य एवोक्तत्वात् । न च निर्धर्मकत्वात् ब्रह्मणस्सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्रातिव्याप्तिः । सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावानधिकरणत्वात् निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वाच्चेति दिक् ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम् । ननु, प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वे अद्वैतहानिः, प्रातिभासिकत्वे सिद्धसाधनं, व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधितया अर्थान्तरं, अद्वैतश्रुतेरतत्वावेदकत्वं च तत्प्रतियोगिनो प्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वं च स्यादिति चेन्न । प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वान्निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम् । न च तात्त्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्त्विकत्वापत्तिः । तात्त्विकाभावप्रतियोगिनि शुक्तिरजतादौ कल्पिते व्यभिचारात् । अतात्त्विक एव वा निषेधोऽयम् । अतात्त्विकत्वेऽपि न प्रातिभासिकः । किं तु व्यावहारिकः । न च तर्हि [2]निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वादर्थान्तरमिति वाच्यम् । स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात् । निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम् । किं तु निषेध्यापेक्षया न्यूनसत्ताकत्वम् । प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वम् । न च निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिरिति वाच्यम् । तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति । यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते, न निषेधमात्रं निषिध्यते । यथा रजते नेदं रजतमिति ज्ञानानन्तरं इदं नारजतमिति ज्ञानेन रजतं व्यवस्थाप्यते । यत्र तु प्रतियोगिनिषेधयोरुभयोरपि निषेधस्तत्र न प्रतियोगिसत्त्वम् । यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोर्निषेधः । एवञ्च प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य निषेधस्य च बाधनान्न [1]निषेधस्य बाध्यत्वेऽपि प्रपञ्चस्य तात्त्विकत्वम् । उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात् । न चातात्त्विकनिषेधबोधकत्वे श्रुतेरप्रामाण्यापत्तिः । ब्रह्मभिन्नं प्रपञ्चनिषेधादिकं अतात्त्विकमित्यतात्त्विकत्वेन बोधयन्त्याः श्रुतेरप्रामाण्यासम्भवात् । नन्वेतन्निषेधप्रतियोगित्वं किं स्वरूपेण, उतासद्विलक्षणस्वरूपानुपमर्देन, पारमार्थिकत्वाकारेण वा । नाद्यः । श्रुत्यादिसिद्धोत्पत्तिकस्यार्थक्रियासमर्थस्याविद्योपादानकस्य तत्त्वज्ञाननाश्यस्य च वियदादेः रूप्यादेश्च धीकालविद्यमानेन असद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात् । नापि द्वितीयः । अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेन अन्योन्याश्रयात् । पारमार्थिकत्वस्यापि स्वरूपेण

१. तन्निषेधस्य' इति ख. पाठः । २. 'स्यान्निषेधस्य' इति क. पाठः ।

निषेधे प्रथमपक्षोक्तदोषापत्तिः । अतस्तस्यापि पारमार्थिकत्वाकारेण निषेधे अनवस्था स्यादिति चेन्नैवम् । स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपञ्चे शुक्तिरूप्ये चाङ्गीकारात् । तथाहि—शुक्तौ रजतभ्रमानन्तरं अधिष्ठानतत्वसाक्षात्कारे रूप्यं नास्ति नासीन्नभविष्यतीति स्वरूपेणैव 'नेह नाने'ति श्रुत्या च प्रपञ्चस्य स्वरूपेणैव निषेधप्रतीतेः । न च तत्र लौकिकपरमार्थरजतमेव स्वरूपेण निषेधप्रतियोगीति वाच्यम् । भ्रमबाधयोर्वैयधिकरण्यापत्तेः, अप्रसक्तप्रतिषेधापत्तेश्च । न च तर्ह्युत्पत्त्याद्यसंभवः । न ह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे तन्त्रम् । परैरनिषेध्यरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात् । किं तु वस्तुस्वभावादिकमन्यदेव किञ्चित् प्रयोजकं वक्तव्यम् । तस्य मयापि कल्पितस्य स्वीकारात् । न च त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति मतहानिः स्यादिति वाच्यम् । अस्याचार्यवचसः पारमार्थिकलौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यर्थः । तच्च स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वा शब्दः । एतावदुक्तिश्च पुरोवर्त्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थं लौकिकपरमार्थरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं च । तदुक्तं तत्वदीपिकायां—'तस्माल्लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीति पूर्वाचार्याणां वाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकपरमार्थरजतमिदं न भवतीति निषेधप्रतियोगितामङ्गीकृत्य नेतव्ये'ति । अयमाशयः । एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वनियमस्य व्युत्पत्तिबलसिद्धत्वात् , 'घटः पटो न भवती'ति वाक्यव'दिदं रजतं न भवती' ति वाक्यस्य अन्योन्याभावबोधकत्वे स्थिते अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः 'नेदं रजत'मिति वाक्याभिलप्यप्रतीतेरन्योन्याभावविषयत्वमेव । तथा चेदंशब्दनिर्दिष्टे पुरोवर्तिप्रातीतिकरजते रजतशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभावप्रतीतेरार्थिकं मिथ्यात्वम् । 'नात्र रजत'मिति वाक्याभिलप्या तु प्रतीतिरत्यन्ताभावविषया । भिन्नविभक्त्यन्तपदोपस्थापितयोरेव धर्मिप्रतियोगिनोर्नञः संसर्गाभावबोधकत्वनियमात् । सा च पुरोवर्तिप्रतीतरजतस्यैव व्यावहारिकमत्यन्ताभावं विषयीकरोतीति कण्ठोक्तमेव मिथ्यात्वम् । अतो नापसिद्धान्तो नान्यथाख्यात्यापत्तिर्न वा ग्रन्थविरोध इत्यनवद्यम् । नन्वेवमत्यन्तासत्त्वा-

१. 'अधिष्ठानसाक्षात्कारे' इति ख. पाठः । २. 'निषेधप्रतियोगि' इति ख. पाठः ।

पातः, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं ह्यन्यत्रासत्त्वेन सम्प्रतिपन्नस्य घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यवसितम् । अन्यथा तेषां अन्यत्र सत्त्वापातात् । न हि तेषामन्यत्र सत्ता सम्भवतीति त्वदुक्तेश्च । तथा च कथमसद्वैलक्षण्यम् । न हि शशशृङ्गादेरितोऽन्यदसत्त्वम् । न च निरुपाख्यत्वमेव तदसत्त्वम् । निरुपाख्यत्वपदेनैव आख्यायमानत्वात् । नाप्यप्रतीयमानत्वमसत्त्वम् । असतोऽप्रतीतौ असद्वैलक्षण्यज्ञानस्यासत्प्रतीतिनिरासस्यासत्पदप्रयोगस्य चायोगात् । न चापरोक्षतया अप्रतीयमानत्वं तत् । नित्यातीन्द्रियेष्वतिव्याप्तेः, इति चेन्मैवम् । सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोस्साधारणम् । तथापि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं अत्यन्तासत्त्वम् । तच्च शुक्तिरूप्ये प्रपञ्चे च बाधात् पूर्वं नास्त्येवेति न तुच्छत्वापत्तिः । न च बाधात् पूर्वं शुक्तिरूप्यं प्रपञ्चो वा सत्त्वेन न प्रतीयते । एतदेव सदर्थकेनोपाधिपदेन सूचितम् । शून्यवादिभिः सदधिष्ठानभ्रमानङ्गीकारेण क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासद्वैलक्षण्यस्य ( क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपस्य) शुक्तिरूप्ये प्रपञ्चे चानङ्गीकारात् । नन्वेवं सति यावत्सदधिकरणात्यन्ताभावप्रतियोगित्वं पर्यवसितम् । तथा च केवलान्वय्यत्यन्ताभावप्रतियोगिषु अवृत्तिषु गगनादिषु तार्किकाणां सिद्धसाधनम् । यदधिकरणं यत्सत् तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षायां अधिकरणपदेनावृत्तिनिराकरणेऽपि संयोगसम्बन्धेन समवायसम्बन्धेन वा यत् घटाधिकरणं समवायसंबन्धेन संयोगसंबन्धेन वा घटस्य तन्निष्ठात्यन्ताभावप्रतियोगितया सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनम्। येन संबन्धेन यद्यस्याधिकरणं तेन सम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति विवक्षायां अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति चेन्न। येन रूपेण यदधिकरणतया यत् प्रतिपन्नं तेन रूपेण तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात् । तच्च रूपं संबन्धविशेषोऽवच्छेदकविशेषश्च । न हि सम्बन्धविशेषमन्तरेण भूतले घटाधिकरणता प्रतीयते । अवच्छेदकविशेषमन्तरेण वा वृक्षे कपिसंयोगाधिकरणता । तथा च येन सम्बन्धविशेषेण येन चावच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम् । यदि पुनः ध्वंसप्रागभावप्रतियोगित्वमिवात्यन्ताभावप्रतियोगित्वमाकाशादौ न स्यात् । साधकमानाभावस्य तुल्यत्वात् इहाकाशो नास्तीति प्रत्यक्ष-

---

१. 'वृत्तिपदार्थेषु' इति ख. पाठः । २. 'न कश्चित्सिद्धसाधनम्' इति ख. पाठः ।

प्रतीत्यसम्भवात्, अनुमाने चानुकूलतर्काभावात्, सामान्यतो दृष्टमात्रेण ध्वंसप्रागभावप्रतियोगित्वस्यापि सिद्धिप्रसङ्गात्तद्व्यतिरेकेण कस्यचित् कार्यस्यानुपपत्तेरभावाच्च । एवं संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्त्वे मानाभावाल्लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात् सम्बन्धविशेषप्रवेशे च गौरवात् घटसमवायमात्रविषयतया प्रतीतेरुपपत्तेराधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वशङ्कानुदयादुक्तयुक्तेश्च न घटादेरत्यन्ताभावसामानाधिकरण्यम् । एवं संयोगतदभावयोर्नैकाधिकरण्यम् । 'अग्रे वृक्षः कपिसंयोगी मूले ने' ति प्रतीतेरग्रमूलयोरेव संयोगतदभाववत्तयोपपत्तेः । तदा सन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं मन्तव्यम् । न चैवं सति भावाभावयोरविरोधात्तद्ज्ञानयोर्बाध्यबाधकभावो न स्यादिति वाच्यम् । भिन्नसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात् । यत्र भूतले यस्य घटस्यात्यन्ताभावो व्यावहारिकः तत्र स घटो न व्यावहारिक इति नियमात् । न चैवं सति 'शुक्तिरियं न रजत'मिति ज्ञानविषयीभूताभावस्य व्यावहारिकत्वेन पुरोवर्तिप्रतीतरजतस्य व्यावहारिकत्वापहारेऽपि प्रातीतिकसत्त्वानपहारात् बाधोत्तरकालेऽपि 'इदं रजत'मिति प्रतीतिः स्यादिति वाच्यम् । तत्र 'इयं शुक्ति'रित्यपरोक्षप्रमया प्रातीतिकरजतोपादानाज्ञाननिवृत्तौ [1]प्रातीतिकसत्त्वस्याप्यपहारात्, शुक्त्यज्ञानस्य प्रातीतिकरजतोपादानत्वेन तदसत्त्वे प्रातीतिकरजतासत्त्वस्यावश्यकत्वात् । अत एव यत्र परोक्षयाधिष्ठानप्रमया न भ्रमोपादानाज्ञाननिवृत्तिः । तत्र व्यावहारिकत्वापहारेऽपि प्रातीतिकत्वानपहारात् । 'तिक्तो गुड' इत्यादिप्रतीतिरनुवर्तत एव । एवमखण्डब्रह्मसाक्षात्कारात्पूर्वं परोक्षबोधेन प्रपञ्चस्य व्यावहारिकत्वापहारेऽपि प्रतीतिरनुवर्तत एव । अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तिष्यते । एतेन उपाधिशब्देनाधिकरणमात्रविवक्षायामर्थान्तरम् । वाय्वधिकरणकात्यन्ताभावप्रतियोगित्वेऽपि रूपस्यामिथ्यात्वात् । अधिष्ठानविवक्षायां तु भ्रमोपादानाज्ञानविषयस्याधिष्ठानत्वेनान्योन्याश्रयत्वं, ज्ञानस्य भ्रमत्वे विषयस्य मिथ्यात्वं, विषयस्य मिथ्यात्वे च ज्ञानस्य भ्रमत्वमिति परास्तम् । उक्तरीत्या अधिकरणाविवक्षायां दोषाभावात् । न च 'स एवाधस्ता'दिति श्रुत्या प्रतिपन्ने देशकालाद्युपाधौ परमार्थतो ब्रह्मणोऽभावात्तत्रातिव्याप्तिरिति वाच्यम् । निर्धर्मके तस्मिन्नभावप्रतियोगित्वरूपधर्माभावात् । न चैवं सत्यत्वमपि तत्र न स्यात्, तथा च 'सत्यं ज्ञानमनन्त'मित्यादिश्रुतिव्याकोप [2]इति वाच्यम् । अधिकरणातिरिक्ताभावानभ्युपगमेनोक्तमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मस्वरूपाविरोधात् । एते-

---

१. 'प्रातीतिकरजतसत्त्वस्य' इति ख. पाठः । २. 'व्याकोप इत्यादि वाच्यम् । ' इति क. पाठः ।

न स्वप्रकाशत्वाद्यपि व्याख्यातम् । परप्रकाश्यत्वाभावो हि स्वप्रकाशत्वम् । कालपरिच्छेदाभावो नित्यत्वम् । देशपरिच्छेदाभावो विभुत्वम् । वस्तुपरिच्छेदाभावः पूर्णत्वमित्यादि । तथा च भावभूतधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूपतया न काप्यनुपपत्तिरिति सर्वमवदातम् ॥

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् । ननूत्तरज्ञाननिवर्त्ये पूर्वज्ञाने अतिव्याप्तिः । मुद्गरपातादिनिवर्त्ये च घटादावव्याप्तिः । ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्ययं दोषः । अधिष्ठानसाक्षात्कारत्वेन निवर्त्ये शुक्तिरजतादौ च ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् साध्यविकलता । ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां ज्ञानत्वव्याप्येन स्मृतित्वेन ज्ञाननिवर्त्ये संस्कारे अतिव्याप्तिरिति चेन्न । ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम् । अवस्थितिश्च द्वेधा । स्वरूपेण कारणात्मना च । सत्कार्यवादाभ्युपगमात् । तथा च मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहेऽपि कारणात्मनावस्थितिविरहाभावात् ब्रह्मज्ञानप्रयुक्त एव स इति नातीतघटादावव्याप्तिः । अत एवोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने सिद्धसाधनम् । न वा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वासिद्ध्यार्थान्तरम् । उत्तरज्ञानेन लीनस्य पूर्वज्ञानस्य स्वकारणात्मनावस्थानादवस्थितिसामान्यविरहानुपपत्तेः । शशविषाणादाववस्थितिसामान्यविरहेऽपि तस्य ज्ञानप्रयुक्तत्वाभावान्नातिव्याप्तिः । शुक्तिरजतादेश्चापरोक्षप्रतीत्यन्यथानुपपत्त्या प्रतिभासकाले अवस्थित्यङ्गीकारान्न बाधकज्ञानं विना तद्विरह इति न साध्यविकलता । अत एवोक्तं विवरणाचार्यैः — 'अज्ञानस्य स्वकार्येण प्रविलीनेन वर्तमानेन वा सह ज्ञानेन निवृत्तिर्बाध' इति । वार्तिककृद्भिश्चोक्तम् — 'तत्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नासीदस्ति भविष्यति ॥' इति । 'सह कार्येण नासी' दिति लीनेन कार्येण सह निवृत्त्यभिप्रायम् । 'सह कार्येण न भविष्यती' ति तु भाविकार्यनिवृत्त्यभिप्रायमित्यन्यदेतत् । रूप्योपादानमज्ञानं स्वकार्येण वर्तमानेन लीनेन वा सहाधिष्ठानसाक्षात्कारान्निवर्तते । तत्तद्रूप्योपादानानां[1] अज्ञानानां भेदाभ्युपगमादिति न दृष्टान्ते साध्यवैकल्यम् । मुद्गरपातानन्तरं घटो नास्तीति प्रतीतिवदधिष्ठानज्ञानानन्तरं शुक्त्यज्ञानं तद्गतरूप्यं च नास्तीति प्रतीतेः सर्वसम्मतत्वात् । ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वमित्यपि साधु । उत्तरज्ञानस्य पूर्वज्ञाननिवर्तकत्वं च न ज्ञानत्वव्याप्यधर्मेण । किंत्विच्छादिसाधारणेनोदीच्यात्मविशेषगुणत्वेन उदीच्यत्वेन वेति न सिद्धसाधनादि । नापीच्छाद्यनिवर्त्ये स्मृतित्वेन ज्ञाननिवर्त्ये

१. 'तत्तद्धर्मोपादानाज्ञानानाम्' इति ख. पाठः ।

संस्कारे अतिव्याप्तिः । [1]स्मृतित्वेन स्मृतेः संस्कारनिवर्तकत्वे मानाभावात् । स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम् । दृढत्वं च स[2]मानविषयकसंस्कारानेकत्वमित्यदोषः । वस्तुतस्तु, साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम् । अतो न पूर्वोक्तदोषः । [3]नापि निश्चयत्वेन ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्ये संशये अतिव्याप्तिरिति, सर्वमवदातम् ॥ स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम् । तच्च स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वम् । अतः पूर्ववैलक्षण्यम् । दूषणपरिहारः पूर्ववत् । न च संयोगिनि समवायिनि वा देशे तदत्यन्ताभावासम्भवः । सम्भवे तूपादानत्वाद्यनुपपत्तिरिति वाच्यम् । काले सहसम्भववद्देशेऽपि सहसम्भवाविरोधात्, प्रागभावसत्त्वेनोपादानत्वाविरोधाच्च । न चात्यन्ताभावाधिकरणे प्रागभावस्याप्यनुपपत्तिरिति वाच्यम् । काले व्यभिचारात् । न च, काले प्रागभावात्यन्ताभावयोः सामानाधिकरण्यमिदानीं घटात्यन्ताभाव इदानीं घटप्रागभाव इति प्रतीतिबलादङ्गीकृतम् । देशे तु, तदुभयसामानाधिकरण्ये न किञ्चिदपि प्रमाणमिति वाच्यम् । मिथ्यात्वानुमितेः श्रुतेश्च प्रमाणत्वात् । विषमसत्ताकभावाभावयोरविरोधः पूर्वमुपपादितः । न च असत्यतिव्याप्तिः । स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वस्य विवक्षितत्वात् । न च 'तद्धैक आहुरसदेवेदमग्र आसी'दिति श्रुत्या असतः सत्त्वप्रतीतेस्तत्रातिव्याप्तिर्दुष्परिहरेति वाच्यम् । 'सदेवेदमग्र आसी'दित्यस्यार्थस्याभाव एव नञा प्रतिपाद्यते, न त्वसतः सत्त्वम् । विरोधात् । अतः नातिव्याप्तिः । सर्वं चान्यत् पूर्वोक्तमेवानुसन्धेयमित्युपरम्यते ॥ सद्विविक्तत्वं वा मिथ्यात्वम् । सत्त्वं च प्रमाणसिद्धत्वम् । प्रमाणत्वं च दोषासहकृतज्ञानकरणत्वम् । तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिध्यति । प्रमाणसिद्धत्वं चाबाध्यत्वव्याप्यमित्यन्यत् । अत्राप्यसति निर्धर्मके ब्रह्मणि चातिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वं विशेषणं देयम् । तयोः सत्त्वप्रकारकप्रतीतिविषयत्वाभावात् । अत एव 'सद्विविक्तत्व'मित्यत्र सत्त्वं सत्ताजात्यधिकरणत्वं वा अबाध्यत्वं वा ब्रह्मरूपत्वं वा । आद्ये घटादावाविद्यकजातेस्त्वयाभ्युपगमेनासम्भवः । द्वितीये बाध्यत्वरूपमिथ्यात्वपर्यवसानम् । तृतीये सिद्धसाधनमिति निरस्तम् । अनभ्युपगमादेव सदसद्विलक्षणत्वपक्षोक्तयुक्तयश्चात्रानुसन्धेयाः । अवशिष्टं च दृष्टान्तसिद्धौ वक्ष्यामः ॥

॥ इत्यद्वैतसिद्धौ मिथ्यात्वनिरुक्तिः ॥

---

१. 'स्मृतित्वेन' इति पदं ख.घ. पुस्तकयोर्नास्ति । २, 'समानाकारसंस्कार' इति ख, पाठः । ३. न वा निश्चयत्वेन' इति ख. पाठः ।

ननु, उक्तमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः । एकस्मिन् धर्मिणि प्रसक्तयोः विरुद्धधर्मयोः एकमिथ्यात्वे अपरसत्यत्वनियमात् । मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः । उभयथाप्यद्वैतव्याघात इति चेन्न । मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तेः । तत्र हि विरुद्धयोर्धर्मयोरेकमिथ्यात्वे अपरसत्यत्वम् । यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् । यथा परस्परविरहरूपयो रजतत्वतदभावयोः शुक्तौ । यथा वा परस्परविरहव्यापकयोरजतभिन्नत्वरजतत्वयोस्तत्रैव । तत्र निषेध्यतावच्छेदकभेदनियमात् । प्रकृते तु, निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि । यथा गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यमिति नैकतरनिषेधे अन्यतरसत्वं, तद्वत् । यथा च सत्यत्वमिथ्यात्वयोर्न परस्परविरहरूपत्वम् । न वा परस्परविरहव्यापकत्वम् । तथोपपादितमधस्तात् । परस्परविरहरूपत्वेऽपि विषमसत्ताकयोरविरोधात् । व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात्, तार्किकमतसिद्धसंयोगतदभाववत् सत्यत्वमिथ्यात्वयोः समुच्चयाभ्युपगमाच्च । एकस्य साधकेन अपरस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम् । यथा शुक्तिरूप्यतदभावयोः । एकबाधकबाध्यत्वं च समसत्ताकत्वे प्रयोजकम् । यथा शुक्तिरूप्यशुक्तिभिन्नत्वयोः । अस्ति च प्रपञ्चतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वम् । अतः समसत्ताकत्वान्मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधान्नाद्वैतक्षतिरिति कृतमधिकेन ॥

॥ इति मिथ्यात्वमिथ्यात्वोपपत्तिः ॥

ननु, मिथ्यात्वे साध्ये हेतूक्तं यद्दृश्यत्वं तदप्युपपादनीयम् । तथा हि किमिदं दृश्यत्वं वृत्तिव्याप्यत्वं वा, फलव्याप्यत्वं वा, साधारणं वा, कदाचित् कथञ्चिद्विषयत्वं वा, स्वव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियतिर्वा, अस्वप्रकाशत्वं वा । नाद्यः । आत्मनो वेदान्तजन्यवृत्तिव्याप्यत्वेन तत्र व्यभिचारात् । अत एव न तृतीयोऽपि । नापि द्वितियः । नित्यातीन्द्रिये शुक्तिरूप्यादौ च तदभावेन भागासिद्धिसाधनवैकल्ययोः प्रसङ्गात् । नापि चतुर्थः । ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन आत्मनि व्यभिचारात् । नापि पञ्चमः । ब्रह्मण्यप्यद्वितीयत्वादिविशिष्टव्यहारे संविदन्तरापेक्षानियतिदर्शनेन व्यभिचारात् । नापि षष्ठः । स हि अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपः । तथा च शुक्तिरूप्यादेरपि अपरोक्षव्यवहारयोग्यत्वेन साधनवैकल्यादिति चेन्मैवम् । फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वात् । न च वृत्तिव्याप्यत्व-

१. 'व्यवहारप्रयोजकविषयत्वरूपसाधारणं वा' इति ग. घ. पाठः ।

पक्षे ब्रह्मणि व्यभिचारः । अन्यथा ब्रह्मपराणां वेदान्तानां वैयर्थ्यप्रसङ्गादिति वाच्यम् । शुद्धं हि ब्रह्म न दृश्यम् । 'यत्तदद्रेश्य' मिति श्रुतेः । किंतूपहितमेव । तच्च मिथ्यैव । न हि वृत्तिदशायां तदनुपहितं तद्भवति । न च 'सर्वप्रत्ययवेद्ये ऽस्मिन् ब्रह्मरूपे व्यवस्थिते ।' इति स्ववचनविरोध इति वाच्यम् । तस्याप्युपहितपरत्वात् । न चैवं सति शुद्धसिद्धिर्न स्यादिति वाच्यम् । स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् । नन्वज्ञाते धर्मिणि कस्यचित् धर्मस्य विधातुं निषेद्धुं वा अशक्यत्वेन शुद्धे दृश्यत्वं निषेधता शुद्धस्य ज्ञेयत्वमवश्यं स्वीकरणीयम् । न च स्वप्रकाशत्वेन स्वतःसिद्धे शुद्धे श्रुत्या दृश्यत्वनिषेध इति वाच्यम् । शुद्धं स्वप्रकाशमिति शब्दजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धेरिति चेन्न । वृत्तिकाले वृत्तिरूपेण धर्मेण शुद्धत्वासम्भवात् । शुद्धस्य वृत्तिविषयत्वं न सम्भवति । अतः 'शुद्धं स्वप्रकाश'मिति वाक्यस्य लक्षणया अशुद्धमस्वप्रकाशत्वव्यापकमित्यर्थः । तथा च अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति । यथा भेदनिषेधेन अभिन्नत्वम् । न च शुद्धपदेन अभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोगवैयर्थ्यमिति वाच्यम् । पर्यवसितार्थमादाय सार्थकत्वोपपत्तेः । एवं च 'शुद्धं न दृश्यं न मिथ्ये'त्यस्याप्यशुद्धत्वं दृश्यत्वमिथ्यात्वयोर्व्यापकमित्येतत्परत्वेन शुद्धे दृश्यत्वमिथ्यात्वयोर्व्यतिरेकः पर्यवस्यति । एतेन स्फुरणमात्रमेव मिथ्यात्वे तन्त्रम् । लाघवात् । अतः 'स्वतः स्फुरदपि ब्रह्म मिथ्यैवे'ति शून्यवादिमतमपास्तम् । स्वतस्स्फुरणरूपतायाः शुक्तिरूप्यादावभावात्, स्फुरणविषयत्वस्य ब्रह्मण्यसिद्धेः । ननु, विशिष्टज्ञाने विशेष्यस्यापि भाने श्रुत्या विशिष्टस्य दृश्यत्वेनैव विशेष्यस्यापि दृश्यत्वाद्व्यभिचारः । न च विष्णवे शिपिविष्टाये'त्यादौ विशिष्टस्य देवतात्ववत् विशिष्टस्य विषयत्वम् । अग्नीषोमयोर्मिलितयोर्देवतात्ववद्वा मिलितस्य विषयत्वम् । अतो न विशेष्ये विषयत्वमिति वाच्यम् । तद्वदेव विशेषणस्यापि विषयत्वे भागासिद्धिप्रसङ्गादिति चेन्न । विशेष्यतापन्नस्य विषयत्वेऽपि क्षत्यभावात् । तस्य मिथ्यात्वाभ्युपगमात् । अत एवोपहितविषयत्वेऽप्युपधेयविषयत्वमक्षतमेवेत्यपास्तम् । उपहितात्मना तस्यापि मिथ्यात्वाभ्युपगमात्, ज्ञानान्तरविषयत्वेन विशेषणे भागासिद्ध्यभावाच्च । ननु, वेदान्तजन्याखण्डवृत्तेरुपहितविषयत्वे तदानीमुपाध्यन्तराभावेन तस्या एवोपधायकत्वात् स्वविषयत्वापत्तिः । न चेष्टापत्तिः । शाब्दबोधे शब्दानुपस्थिताभाननियमेन वृत्तेः श-

१. 'दृश्यत्वानिषेधा'दिति ग.च.पाठः २. 'वृत्त्या' इति क.ख.ग.पाठः ।

ब्दानुपस्थितताया भानानुपपत्तेः । यथा कथंचिदुपपत्तौ वा न ततोऽज्ञानतत्कार्ययोर्निवृत्तिः स्यात् । अज्ञानतत्कार्याविषयकज्ञानस्यैव तदुभयनिवर्तकत्वात् । अन्यथा 'अहमज्ञः अयं घट' इत्यादिज्ञानानामप्युपहितविषयकत्वेन अज्ञाननिवर्तकत्वप्रसङ्ग इति चेन्न । वृत्तेः शाब्दवृत्तावभासमानाया एवोपधायकत्वाभ्युपगमात् । तदुक्तं कल्पतरुकृद्भिः—'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते । स्वस्याप्युपाधित्वाविशेषात् । एवं च नानुपहितस्य विषयता । वृत्त्युपरागोऽत्र सत्तयोपयुज्यते । न भास्यतया विषयकोटिप्रवेशेने' ति । अयमभिप्रायः - यथा अज्ञानोपहितस्य साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति । जडत्वात् । किं तु साक्ष्यकोटावेव । एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिर्विषयकोटौ प्रविशति । स्वस्याः स्वविषयत्वानुपपत्तेः । किं तु स्वयमविषयोऽपि चैतन्यस्य विषयतां सम्पादयतीति न क्वाप्यनुपपत्तिः । एतेन ज्ञानाज्ञानयोरेकविषयत्वं व्याख्यातम् । अज्ञानमपि हि स्वोपाधानदशायामेव ब्रह्म विषयीकरोति । स्वानुपाधानदशायां स्वस्यैवाभावात् । तथा च ज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयकत्वे सत्युपहितविषयकत्वात् समानविषयत्वमस्त्येव । एतेनोपाधिविषयज्ञानानामज्ञानानिवर्तकत्वं व्याख्यातम् । अज्ञानस्योपाध्यविषयत्वेन समानविषयत्वाभावात् समानविषयत्वेनैव तयोर्निवर्त्यनिवर्तकभावात् । वस्तुतस्तु, शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम् । अन्यथा 'शशविषाणं तुच्छ'मित्यादिशब्दजन्यवृत्तिविषये तुच्छे व्यभिचारस्य दुरुद्धरत्वात् । एवं च सति शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न तत्र व्यभिचारः । तुच्छशुद्धयोः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमात् । यद्वा । सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम् । प्रकारश्च सोपाख्यः कश्चिद्धर्मः । तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः । अभावत्वस्यापि सोपाख्यत्वादभावत्वप्रकारकज्ञानविषयीभूते अभावे न भागासिद्धिः । उपाख्या चास्तीतिप्रतीतिविषयत्वादीत्यन्यत् । एतेन वृत्तिव्याप्यफलव्याप्ययोः साधारणं व्यवहारप्रयोजकविषयत्वरूपं दृश्यत्वमपि हेतुः । ब्रह्मणि तुच्छे च व्यभिचारपरिहारोपायस्योक्तत्वात् । यद्वा । दृश्यत्वं चिद्विषयत्वम् । तच्च यथा कथं चिच्चित्सम्बन्धित्वरूपं हेतुः । तच्च न चैतन्ये । अभेदे भेदनान्तरीयकस्य सम्बन्धस्याभावात् । अतो न व्यभिचारः । तुच्छे च व्यभिचारः परिहरणीयः । यद्वा । स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरूपं दृश्यत्वं हेतुः । संविच्छब्देन विषयाभिव्यक्तं वा, वृत्त्यभिव्यक्तं वा, शुद्धं वा चैतन्यमात्रमभिप्रेतम् । तथा च घटादौ नित्यातीन्द्रिये साक्षिभास्ये च सर्वोऽपि व्यवहारः स्वातिरिक्तसंवित्सापेक्ष इति नासिद्धिः । व्यवहा-

१, 'निवृत्तिरुदयते' इति ख, ग, घ, पाठः ।

रश्च स्फुरणाभिवदनादिसाधारणः । तत्र ब्रह्मणः स्फुरणरूपे व्यवहारे नित्यसिद्धे स्वातिरिक्तसंविदपेक्षा नास्तीति नियतिपदेन व्यभिचारवारणम् । स्वगोचरयावद्व्यवहारे स्वातिरिक्तसंविदपेक्षायां पर्यवसानात् । अत एवास्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुः । स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम् । 'यत्साक्षादपरोक्षात् ब्रह्मे'ति श्रुतेः । तथा चान्यानधीनापरोक्षत्वं पर्यवस्यति । तन्निरूपितभेदवत्त्वं हेतुः । तच्च नित्यपरोक्षे अन्याधीनापरोक्षे च घटादावस्तीति नासिद्धिः । न च ब्रह्मणोऽपि ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात्तत्र व्यभिचारः । अकल्पितभेदस्य क्वाप्यसिद्धत्वादिति वाच्यम् । तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात् । जीवत्वेश्वरत्वादिरूपस्यान्यस्यैव धर्मस्य तन्निरूपकत्वात् । एवं चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वमपि हेतुः । न च फलव्याप्यत्वाभावविशिष्टं यदपरोक्षव्यवहारयोग्यत्वं तस्य ब्रह्मणीवाविद्यान्तःकरणादौ शुक्तिरूप्यादौ च सत्त्वेनासिद्धिसाधनवैकल्ये इति वाच्यम् । अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्यापरोक्षव्यवहारयोग्यत्वपदेन विवक्षितत्वात् । तस्य चाविद्यादौ शुक्तिरूप्यादौ चासत्त्वात् नासिद्धिसाधनवैकल्ये । यथा च घटादेः फलव्याप्यत्वं तथाग्रे वक्ष्यामः । अविद्यानिवृत्तेः पञ्चमप्रकारत्वाभ्युपगमपक्षे तत्र व्यभिचारवारणायाज्ञानकालवृत्तित्वं हेतुविशेषणं देयम् । तेनैव तुच्छेऽपि न व्यभिचारः । एवमेव सर्वेषु हेतुषु व्यभिचारपरिहाराय यतनीयम् । सद्विविक्तत्वमात्रे तु साध्ये तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च न व्यभिचारगन्धोऽपीति सर्वमवदातम् ॥

॥ इति दृश्यत्वहेतूपपत्तिः ॥

जडत्वमपि हेतुः । ननु, किमिदं जडत्वं, अज्ञातृत्वं वा, अज्ञानत्वं वा, अनात्मत्वं वा । नाद्यः । त्वन्मते पक्षे निक्षिप्तस्यैवाहमर्थस्य ज्ञातृत्वात्तत्रासिद्धेः । शुद्धात्मनोऽज्ञातृत्वेन तत्र व्यभिचाराच्च । नापि द्वितीयः । वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वेन केवलाया वृत्तेः केवलस्य चैतन्यस्य चाज्ञानत्वेन वृत्तावसिद्धिपरिहारेऽपि चैतन्ये व्यभिचारतादवस्थ्यात् । नापि तृतीयः । आत्मत्वस्यैव निरूपयितुमशक्यत्वात् । तद्धि न जातिविशेषः । त्वयात्मन एकत्वाभ्युपगमात् । विशिष्टात्मनां भेदेऽपि तेषां पक्षकुक्षिनिक्षिप्तत्वात् । नाप्यानन्दरूपत्वम् । वैषयिकानन्दे तद्व्यतिरेकस्य हेतोरसिद्धेः । तस्याप्यात्मत्वे अज्ञानपक्षोक्तदोषः प्रसञ्जनीय इति चेन्मैवम् । द्वितीयतृतीयपक्षयोः दोषाभावात् । तथा हि—'अज्ञानत्वं जडत्वमि'ति पक्षे नात्मनि व्यभिचारः । अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायात् । न चाभावे सप्रतियोगित्ववदिच्छाज्ञानादिष्वपि सविषयकत्वस्य

स्वाभाविकत्वादिच्छायामिव ज्ञानेऽपि तस्य समानसत्ताकत्वमिति वाच्यम् । ज्ञानस्य हि सविषयत्वं विषयसम्बन्धः । स च न तात्त्विकः । किं त्वाध्यासिकः । वक्ष्यमाणरीत्या तात्त्विकसम्बन्धस्य निरूपयितुमशक्यत्वात् । अतो न तस्य स्वाभाविकत्वम् । न हि शुक्तौ रूप्यं स्वाभाविकम् । एवं च ज्ञानोपाधिकस्यैव सविषयत्वस्य इच्छादिष्वभ्युपगमात् न सुतरां तत्र तस्य स्वाभाविकत्वम् । न चैवं ज्ञानवत् विषयसम्बन्धं विनापि कदाचिदिच्छायाः सत्त्वापत्तिरिति वाच्यम् । सविषयत्वप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वस्य तत्र प्रयोजकत्वात् इच्छायाश्च तत्समानसत्ताकत्वात् । न च त्वया मोक्षावस्थायामात्मनो निर्विषयत्वाङ्गीकारात् आनन्दाप्रकाशे तदपुमर्थत्वं स्यादिति वाच्यम् । तदा ह्यानन्द एव प्रकाशो न त्वानन्दस्य प्रकाशत्वम् । अर्थोपलक्षितप्रकाशत्वं वा तदास्त्येवेति न ज्ञानत्वहानिरित्युक्तम् । ननु, तथापि ज्ञातुरभावात् तदा तन्न ज्ञानम् । न हि भोक्तृहीना भुजि क्रिया भवति । न चानादित्वेन क्रियारूपत्वाभावात् अनपेक्षत्वमिति वाच्यम् । अनादेः प्रागभावस्य प्रतियोगिनि, जातेर्व्यक्तौ, जीवब्रह्मविभागस्य धर्मिप्रतियोगिनोरज्ञानस्य चाश्रयविषययोर्ब्रह्मसत्तायाश्च कर्तर्यपेक्षादर्शनात् । अन्यथा 'अस्ति ब्रह्मे'त्यादौ कर्तरि लकारो न स्यात् । एवं चातीतादिज्ञानस्य ईश्वरज्ञानस्य च उत्पत्त्यर्थमर्थानपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वं स्वभावः । अन्यथा 'इदमहं जानामी' त्यनुभवो न स्यात् । 'ज्ञातुरर्थप्रकाशस्य ज्ञानत्वा' दिति विवरणविरोधश्च स्यादिति चेन्न । जातेर्व्यक्तिनिरूप्यत्वेऽपि कदाचित्तदसम्बन्धवदुपपत्तेः सम्बन्धप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वात् । अत एव ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वञ्च न स्वाभाविकम् । तथा हि सज्ञेयत्वं तावत् ज्ञेयजन्यत्वं वा ज्ञेयव्याप्यत्वं वा । नाद्यः । परोक्षज्ञाने ईश्वरज्ञाने चाभावात् । नापि द्वितीयः । 'यदाज्ञानं तदार्थ' इति कालिकव्याप्तौ पूर्ववत् व्यभिचारात् । दैशिकव्याप्तिस्तु, दूरनिरस्तैव । न च यदा 'अपरोक्षज्ञानं तदार्थ' इति कालिकव्याप्तौ नास्ति व्यभिचारः । आत्मा च 'यत् साक्षात् अपरोक्षात् ब्रह्मे'ति श्रुतेरपरोक्षज्ञानरूप इति सोऽप्यर्थव्याप्त इति वाच्यम् । ईश्वरज्ञाने योगिज्ञाने च व्यभिचारात् । 'यदैन्द्रियकं ज्ञानं तदार्थ' इति तु व्याप्तिस्सर्वसम्मता । न चात्मरूपे ज्ञाने ऐन्द्रियकत्वं अस्तीति न तया विरोधः । ननु, यदा अपरोक्षं ज्ञानं तदार्थ इति व्याप्तचनभ्युपगमे 'इदं रजत' मित्यपरोक्षज्ञानान्यथानुपपत्त्या अनिर्वचनीयरजतसिद्धिर्न स्यात् । अर्थं विनाप्यपरोक्षत्वोपपत्तेरिति चेन्न । 'इदं रजतमहं जानामी' ति अनुसन्धीयमानं यत् ज्ञानविषयत्वं तस्याश्र-

यान्तरानुपपत्त्या अनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् । अत एव परोक्षभ्रमेऽपि अनिर्वचनीयार्थसिद्धिः । अन्यापरोक्षत्वेन वा अर्थव्याप्यता । आर्षज्ञानस्यापरोक्षत्वानभ्युपगमात् । तथा च नानिर्वचनीयरजतसिद्ध्यनुपपत्तिः । एवं सज्ज्ञातृकत्वमपि किं ज्ञातृजन्यत्वं ज्ञातृव्याप्यत्वं ज्ञातृसमवेतत्वं वा । आद्ये ईश्वरज्ञाने व्यभिचारः । ज्ञाननित्यत्वस्य साधयिष्यमाणत्वाच्च । द्वितीयेऽपि अप्रयोजकता । न तृतीयः । ज्ञातृजन्यत्ववत् ज्ञातृसमवेतत्वस्यापि सम्भवात् । ज्ञानस्य गुणत्वक्रियात्वयोरनभ्युपगमेन द्रव्याश्रयत्वानुमानायोगात् । कदाचित् ज्ञातृज्ञेयसम्बन्धेनैव अनुभवस्य विवरणवाक्यस्य च उपपत्तेः । 'अस्ति ब्रह्मे'ति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्वमाह । नित्यत्वेन तदसम्भवात् । किं तु साधुत्वार्थ इति द्रष्टव्यम् । ननु, प्रमाभ्रमभिन्नं न ज्ञानम् । न चात्मस्वरूपं ज्ञानं प्रमा । तद्विषयस्याविद्यादेस्तात्विकत्वापातात् । न च अप्रमा, दोषजन्यत्वापातादिति चेन्न । तार्किकसिद्धेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्च स्वभावत उभयवैलक्षण्येनाप्युपपत्तेः । तत्रापि ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य, भ्रमत्वे दोषजन्यत्वस्य चापत्तेः । निष्प्रकारके च निर्विकल्पके तद्वति तत्प्रकारकत्वस्य तदभाववति तत्प्रकारकत्वस्य चानुपपत्तेः । जन्यसविकल्पकत्वेन भ्रमप्रमान्यतरत्वनियमे चास्माकं क्षत्यभावात् । विलक्षणवृत्तिद्वयोपरागेण च स्वभावतो भ्रमप्रमाविलक्षणस्याप्यात्मज्ञानस्य तदुभयरूपेण व्यवहारोपपत्तेः । न च ज्ञानपदवाच्यभिन्नत्वविवक्षायां उपाधेरपि ज्ञानपदवाच्यत्वात्तत्रासिद्धिः । ज्ञानपदलक्ष्यभिन्नत्वविवक्षायां तु घटादेरपि ज्ञानपदलक्ष्यत्वात्तत्राप्यसिद्धिरिति वाच्यम् । ज्ञानपदजन्यप्रतीतिविशेष्याभिन्नत्वविवक्षायामुक्तदोषाभावात् । एवमानन्दभिन्नत्वरूपमनात्मत्वमुपपाद्यम् । वैषयिकानन्दस्यापि ब्रह्मरूपत्वात्, तदुपाधिमात्रस्यैवोत्पत्तिविनाशप्रतियोगित्वात् । न च ज्ञानभिन्नत्वस्यानन्दभिन्नत्वस्य च काल्पनिकस्य ब्रह्मणि सत्त्वात् तत्र व्यभिचार इति वाच्यम् । धर्मिसमानसत्ताकतद्भेदस्य हेतुत्वात् । अनौपाधिकत्वेन वा भेदो विशेषणीयः । तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च व्यभिचारपरिहारः पूर्ववत् । एवं अस्वप्रकाशत्वं वा जडत्वम् । तच्च पूर्वमेवोपपादितमिति शिवम् ॥

॥ इति जडत्वहेतूपपत्तिः ॥

परिच्छिन्नत्वमपि हेतुः । तच्च देशतः कालतो वस्तुतश्चेति त्रिविधम् । तत्र देशतः परिच्छिन्नत्वं अत्यन्ताभावप्रतियोगित्वम् । कालतः परिच्छिन्नत्वं ध्वंसप्रतियोगित्वम् । वस्तुतः परिच्छिन्नत्वं अन्योन्याभावप्रतियोगित्वम् । ननु, समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वं आत्मनि व्यभिचारि । तस्याप्याकाशादिवत्

व्याप्यसमवेतत्वात् । संयोगसंबन्धेनात्यन्ताभावप्रतियोगित्वमाकाशादावसिद्धम् । तस्य यावन्मूर्तसंयोगित्वनियमात् । अमूर्तनिष्ठात्यन्ताभावप्रतियोगित्वाभिप्राये तु, आत्मनि व्यभिचारस्तदवस्थः । सर्वसम्बन्धित्वाभावविवक्षायामपि सर्वसम्बन्धशून्ये परमात्मनि व्यभिचारः । अज्ञाने सर्वसम्बन्धिन्यसिद्धिश्च । ध्वंसप्रतियोगित्वमपि आकाशादावसिद्धम् । तेषां परैर्नित्यत्वाभ्युपगमात् । अन्योन्याभावप्रतियोगित्वं चात्मनि व्यभिचारि । तस्य जडनिष्ठान्योन्याभावप्रतियोगित्वात् । अन्यथा जडत्वापत्तेरिति चेन्न । अत्यन्ताभावे अन्योन्याभावे च प्रतियोगिसमसत्ताकत्वविशेषणेन आत्मनि व्यभिचारपरिहारात् । अज्ञानाकाशादौ च स्वसमानसत्ताकात्यन्ताभावान्योन्याभावप्रतियोगित्वसत्त्वेन असिद्ध्यभावात् । अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकत्वाभावपक्षे 'स्वान्यूनसत्ताके'ति विशेषणं देयम् । अत एव प्रातिभासिकशुक्तिरूप्यादेर्व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यम् । निरुक्तमिथ्यात्वप्रकाराणामेवंरूपत्वाभावात् न साध्याविशिष्टता । ध्वंसप्रतियोगित्वं चाकाशादौ नासिद्धम् ; 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति श्रुतिसिद्धजन्यत्वेनानुमितत्वात् । 'आकाशवत्सर्वगतश्च नित्य' इत्यत्र चात्मनिदर्शनवत्त्वं स्वसमानकालीनसर्वगतत्वेन आभूतसंप्लवावस्थायित्वेन चेति द्रष्टव्यम् । 'अतोऽन्यदार्त'मिति श्रुत्या अनात्ममात्रस्यैव विनाशित्वप्रतिपादनात् । अत एव 'घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः । विभक्तत्वात् । यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्वा इदमंशे विभज्यते । 'एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते । सन् घटस्सन् पट'इत्यानन्दबोधोक्तमपि साधु । विभक्तशब्देन स्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वात् । न ब्रह्मतुच्छयोर्व्यभिचारः । न च 'खण्डो गौर्मुण्डो गौ'रित्येवमादिस्वानुगतप्रतिभासे गोत्वादौ व्यक्तीनामकल्पितत्वात् व्यभिचार इति वाच्यम् । सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमात, व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववत् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तत्तद्व्यवहारजनकत्वोपपत्तेः । अत एव 'घटादिकं सद्रूपे कल्पितम् । प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् । प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रव'दिति ब्रह्मसिद्धिकारोक्तमपि साधु । ननु, सदर्थस्य ब्रह्मणः रूपादिहीनस्यासंसारमज्ञानावृतस्य शब्दैकगम्यस्य कथं घटस्सन्नित्यादिबुद्धिविषयता स्यात् । तथा च 'घटोऽनित्य' इत्यनेन घटगतानित्यतेव 'घटस्स'न्नित्यनेनापि घटगतमेव सत्त्वं

गृह्यते । न च स्वरूपेणाप्रत्यक्षस्य राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेनैव प्रत्यक्षतेति वाच्यम् । शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वाद्यापातात् । राहोस्तु, दूरदोषेणाज्ञातस्य नीलस्य योग्यस्य शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषता युक्तेति चेन्न । यतस्सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वम् । किं तु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव । तथा च चक्षुरादिजन्यवृत्त्या तदावरणभङ्गे सति 'सन्घट'इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात् । न च रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिः बाधिकेति वाच्यम् । प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात् । सर्वेन्द्रियग्राह्यं[1] तु सद्रूपं ब्रह्म । नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः । सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च । तदुक्तं वार्तिककृद्भिः—'अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः । अक्षादीनां स्वतस्सिद्धो यत्र तेषां प्रमाणता ॥'इति॥ कालस्य च रूपादिहीनस्य मीमांसकादिभिस्सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्[2] । न च शब्दावच्छिन्नस्याकाशस्यापि श्रावणत्वं स्यादिति[3] वाच्यम् । स्वभावतो योग्यस्य हि केनचिन्निमित्तेन प्रतिरुद्धयोग्यताकस्यावच्छेदकादिना योग्यता सम्पाद्यते । यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोश्चन्द्रसबन्धेन । एवं चावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यं भवति । नभस्तु, स्वभावायोग्यमेव । न प्रतिरुद्धयोग्यताकम् । येन शब्दावच्छेदेन योग्यं भवेत् । यद्वा । द्रव्यग्रहे चक्षुषो रूपापेक्षा । नत्वन्यग्रहे । ब्रह्म तु, न द्रव्यम् । 'अस्थूलमनणु अह्रस्वमदीर्घ'मिति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात् । अतो नानुपपत्तिः । अस्तु वा द्रव्यम् । तथाप्यध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षूरूपमपेक्षते । ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेवेति न तद्ग्रहे रूपाद्यपेक्षा । कल्पितत्वं च स्वाभाववति प्रतीयमानत्वं वा स्वरूपज्ञाननिवर्त्यत्वं वेत्यन्यदेतत् । तस्मात् परिच्छिन्नत्वमपि भवति हेतुरिति सिद्धम् ॥

॥ इति परिच्छिन्नत्वहेतूपपत्तिः ॥

चित्सुखाचार्यैस्तु, 'अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी । अंशित्वात् । इतरांशिव'दित्युक्तम् । तत्र तन्तुपदमुपादानपरम् । एतेनोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः । न च कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनम् । अनाश्रितत्वेनान्याश्रितत्वेन वा उपपत्त्या अर्थान्तरं च, इति

१. 'सर्वेन्द्रियग्राह्यानुगतसद्रूपम्' इति घ. पाठः । २. 'ग्राह्यत्वमभ्युपगतम्' इति ख. ग. घ. पाठः ।
३. श्रावणत्वापत्ति'रिति ख. घ. पाठः ।

वाच्यम् । अभेदे कार्यकारणभावव्याहत्या कथञ्चिदपि भेदस्यावश्याभ्युपेयत्वात् । न च 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यधिकरणविरोधः । उपादानव्यतिरेकेणोपादेयं नास्तीत्यस्यैव तदर्थत्वात् । बाधात्तन्मात्राश्रितत्वेन पक्षविशेषणाद्वा नार्थान्तरम् । न च प्रकृतेऽपि बाधः । तस्योद्धरिष्यमाणत्वात् । न चात्यन्ताभावस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पावकाशः । तस्य प्रागेव निरस्तत्वात् । न च कस्य चित् पटस्य संयोगवृत्त्यैतत्तन्तुषु सत्त्वेन तत्र व्यभिचार इति वाच्यम् । तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतः तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारेण पक्षसमत्वात् । न चाव्याप्यवृत्तित्वेनार्थान्तरम् । पटतदभावयोरेकाधिकरणवृत्तौ विरोधस्य जगति दत्तजलाञ्जलित्वप्रसङ्गात् संयोगतदभावयोरप्येकाधिकरणवृत्तित्वानभ्युपगमात् । अभ्युपगमे वा एतत्तन्तुत्वावच्छिन्नवृत्तित्वमत्यन्ताभावस्य विशेषणं देयम् । एवमेतत्कालीनत्वमपि । तेन कालान्तरीयाभावमादाय नार्थान्तरम् । न चेह तन्तुषु पट इति प्रत्यक्षबाधः । तस्य भ्रमसाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितत्वेनाबाधकत्वात् । बाधोद्धारे च विस्तरेणैतद्वक्ष्यामः । न चान्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तमिति विरुद्धो हेतुरिति वाच्यम् । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽप्येतत्तन्तुसमवेतस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात् । एतन्निष्ठात्यन्ताभावाप्रतियोगित्वं हि एतत्समवेतत्वे प्रयोजकं न भवति । परमते केवलान्वयिधर्ममात्रस्य एतत्समवेतत्वापत्तेः । किं त्वेतन्निष्ठप्रागभावप्रतियेगित्वादिकम् । तच्चैतन्निष्ठात्यन्ताभावप्रातियोगित्वेऽपि न विरुद्धमित्युपपादितमधस्तात् । एतत्समवेतत्वञ्चैतदुपादानकत्वम् । न तु नित्यसम्बन्धशालित्वम् । तस्यानभ्युपगमात् । नन्वयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न । एतत्तन्त्वारब्धत्वात् व्यतिरेकेण पटान्तरवदिति प्रतिरोधः । न चाप्रसिद्धविशेषणत्वम् । एतन्निष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि । संसर्गाभावप्रतियोगित्वव्याप्यत्वात् । प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेः । न चाकाशात्यन्ताभावस्य घटादौ संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहात् तस्य च केवलान्वयित्वेन किञ्चिन्निष्ठात्यन्ताप्रतियोगित्वाभावात् तत्र व्यभिचार इति वाच्यम् । संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिनि धर्मे सत्त्वेनाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वाव्याप्यत्वेन व्यभिचाराभावादिति चेन्न । यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्त-

तया गुणविषयत्वायोगात् । यत्तु 'यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् । स वै भृत्यः स च स्वामी गुणलुब्धौ न कामुकौ ॥ मुमुक्षोरमुमुक्षुस्तु परश्चैकान्तभक्तिमान् ॥' इत्यादिस्मृत्या मुमुक्षुभक्त्यपेक्षया अमुमुक्षोर्भक्तस्याधिक्योक्तेः तदाधिक्यस्य लोकरीतिसिद्धत्वाच्च 'भक्तिस्सिद्धेर्गरीयसी'ति स्मृत्या अल्पभक्तिसाध्यमुक्त्यपेक्षया अधिकमुक्तिहेतुभक्तेरपि आधिक्यस्योक्तेश्चेति, तन्न । 'यस्त आशिषे' इत्यादिना फलमनिच्छतो गुणलोभेन या भक्तिस्तस्यास्तु गरीयस्त्वं यत् प्रतिपादितं, तत्तत्त्वसाक्षात्कारे त्वरासम्पादकम् । न तु मुक्तितारतम्याक्षेपकम् । भक्तिस्सिद्धेरित्यादिना प्रतिपादितं गरीयस्त्वमपि तज्जनकत्वमात्रेण पुत्रात्पितुरिव । यत्तु, 'अन्ये त्वेवमजानन्तश्श्रुत्वान्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥' इत्यत्रापिशब्देन 'स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । किं पुनर्ब्राह्मणाः पुण्याः भक्ता राजर्षयस्तथा ॥' इत्यत्र कैमुत्येन च साधनतारतम्येन साध्ये तत्प्रतीतिरिति, तन्न । न हि तरणेऽपीत्यस्यान्वयः । किं तु अधिकारिणि । तथा च विलम्बिततरणरूपफलसम्बन्धमात्रपर्यवसानात् कैमुत्यस्यापि त्वराफललाभमात्रेणोपपत्तेः । साधनमात्रतारतम्यस्य फलतारतम्याप्रयोजकत्वाच्च । न हि दण्डतारतम्येन घटतारतम्यं क्वचिदपि दृश्यते । न च 'साधनस्योत्तमत्वेन साध्यमुत्तममाप्नुयुः । ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुताः ॥' इति ब्रह्माण्डे 'अधिकं तव विज्ञानमधिका च गतिस्तवे'ति साक्षान्मोक्षधर्मे च साधनतारतम्येन साध्ये तदुक्तिरिति, तन्न । साधनोत्तमत्वेन साध्योत्तमत्वस्यापरममुक्तिविषयत्वात् । विज्ञानगताधिक्योक्तेरपि साक्षात्कारप्रयोजकसगुणविषयकज्ञानपरत्वाच्च । अत एव दहरादिविद्यानामधिकाल्पगुणविषयत्वेन साधनतारतम्यं यत्पराभिमतं तदप्येवमिति न कश्चिद्दोषः । तस्मात्स्वरूपानन्दस्य स्वप्रकाशात्मरूपिणः । प्राप्तिर्मुक्तिर्न तत्रास्ति तारतम्यं कथं च न ॥

॥ इत्यद्वैतसिद्धौ मुक्तौ तारतम्यभङ्गः ॥

---

यो लक्ष्म्या निखिलानुपेक्ष्य विबुधानेको वृतस्स्वेच्छया
यस्सर्वान्स्मृतमात्र एव सततं सर्वात्मना रक्षति ।

यश्चक्रेण निकृत्य नक्रमकरोन्मुक्तं महाकुञ्जरं
द्वेषेणापि ददाति यो निजपदं तस्मै नमो विष्णवे ॥

श्रीमाधवसरस्वत्यो जयन्ति यमिनां वराः ।
वयं येषां प्रसादेन शास्त्रार्थे परिनिष्ठिताः ॥

सहजसरलां प्रेम्णा दीर्घां समस्तविशोधिनीं
सकृदपि कृपादृष्टिं सन्तो दिशन्तु भवद्विधाः ।
कथमपि सती पूता सद्यस्तया विषयीकृता
मम कृतिरियं हित्वा दोषान्भवत्वतिसद्गुणा ॥

गुरूणाम्माहात्म्यान्निजविविधविद्यापरिचयात्
श्रुतेर्यन्मे सम्यङ्मननपरिनिष्पन्नमभवत् ।
परब्रह्मानन्दस्फुरणमखिलानर्थशमनं
तदेतस्मिन् ग्रन्थे निखिलमतियत्नेन निहितम् ॥

इह कुमतिरतत्त्वे तत्त्ववादी वराकः
प्रलपति यदकाण्डे खण्डनाभासमुच्चैः ।
प्रतिवचनममुष्मै तस्य को वक्तु विद्वान्
न हि रुतमनुरौति ग्रामसिंहस्य सिंहः ॥

कुतर्कगरलाकुलं भिषजितुं मनो दुर्धियां
मयायमुदितो मुदा विषविघातिमन्त्रो महान् ।
अनेन सकलापदां विघटनेन यन्मेऽभवत्
परं सुकृतमर्पितं तदखिलेश्वरे श्रीपतौ ॥

ग्रन्थस्यैतस्य यः कर्ता स्तूयतां वा स निन्द्यताम् ।
मयि नास्त्येव कर्तृत्वमनन्यानुभवात्मनि ॥

श्रीव्यासशङ्करसुरेश्वरपद्मपादान्
वेदान्तशास्त्रमुनिबन्धकृतस्तथान्यान् ।
विद्याप्रदानिह यतिप्रवरान्दयालून्
सर्वान् गुरून् सततमेव नमामि भक्त्या ॥

सिद्धीनामिष्टनैष्कर्म्यब्रह्मगानामियं चिरात् ।
अद्वैतसिद्धिरधुना चतुर्थी समजायत ॥

॥ इति ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीचरण-
शिष्यश्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ
मुक्तिनिरूपणं नाम

—* ॥ चतुर्थः परिच्छेदः ॥ *—




॥ कुम्भघोणे श्रीविद्यामुद्राक्षरशालायां मुद्रितमिदम् ॥